।।ॐ श्रीगणेशाय नमः।।

# अर्थसंग्रहः

टिप्पणसंग्रहकर्ता
**स्वामी शान्तिधर्मानन्द सरस्वती**

**सत्यं साधना कुटीर**

वार्ड नं 3, डाक: कैलास गेट, मुनि की रेती, ऋषीकेश,

तह: नरेन्द्रनगर, जिला: टिहरी गढ़वाल, उत्तराखण्ड 249137.

चल दूरभाष् : 9557130251, www.satyamsadhana.org

यू-टयूब और आर्खाईव : satyamsadhanakutir

youtube and archive : satyamsadhanakutir

| | प्रकाशित पुस्तकों की सूची | |
|---|---|---|
| 1 | शिवपूजापद्धतिप्रकाशः | मुफ्त |
| 2 | पूर्णयोगः (योगपंचदशी) | 175 |
| 3 | सर्वदर्शनसारः | 175 |
| 4. | श्रीचक्रपूजापद्धतिप्रकाशः | 250 |
| 5. | वास्तुपूजापद्धतिप्रकाशः | 120 |
| 6. | शक्तिमहिम्नःस्तोत्रम् | 120 |
| 7. | दुर्गापूजापद्धतिप्रकाशः | 250 |
| 8. | दुर्गाहोमविधिः | 250 |
| 9. | उणादिकोशः | 30 |
| 10. | शक्तिमहिम्नःस्तोत्रम् (मूलमात्रम्) | मुफ्त |
| 11. | शिव-शक्तिमहिम्नःस्तोत्रम् (मूलमात्रम्) | मुफ्त |
| 12. | An Advatik View of Kantian Thoughts | 560 |
| 13. | Holistic Yoga | 220 |
| 14. | Wisdom of Yoga | मुफ्त |
| 15. | अनुभूत अनुष्ठान प्रकाशः | 300 |
| 16. | लघुसिद्धान्तकौमुदी टिप्पणसंग्रहः | 20 |
| 17. | तर्कसंग्रहः टिप्पणसंग्रहः | 20 |
| 18. | अर्थसंग्रहः टिप्पणसंग्रहः | 30 |
| 19. | भागवतपीयूषबिन्दुः | 300 |
| 20. | यतिदण्डैश्वर्यविधानम् (2 खण्ड) | 1000 |

# अर्थसंग्रहः

1. पृ 1- पूर्वमीमांसा (जैमिनीय मीमांसा दर्शनम्)

| | धर्माधर्मविचारः (12 अध्याय) | मानमेयविचारः (4 अध्याय) |
|---|---|---|
| ग्रन्थाः | मीमांसापरिभाषा | मानमेयोदयः |
| | अर्थसंग्रहः | मीमांसाकुतूहलम् |
| | मीमांसान्यायप्रकाशः | मीमांसान्यायमञ्जरी |
| | इत्यादि | इत्यादि |

2. पृ 1- अर्थानां जैमिनीयमीमांसासूत्रभाष्यवार्तिकेषु प्रोक्तानां पदार्थानां संग्रहः।

संग्रहः? विस्तरेणोपदिष्टानामर्थानां सूत्रभाष्ययोः।
निबन्धो यः समासेन संग्रहं तं विदुर्बुधाः।।

3. पृ 1 - मंगं शुभं लाति इति मंगलं। तदनुरूपं आचरतीति मंगलाचरणं।

तच्च त्रिविधं नमस्कारात्मकं, विषयनिर्देशात्मकं, आशीर्वादात्मकञ्च।

अनुबन्धचतुष्टयोपेतं भवति मंगलाचरणं।

किं तत्? संबंधश्चाधिकारी च विषयश्च प्रयोजनं।
विनाऽनुबधं ग्रन्थादौ मंगलं नैव शस्यते।।

अनुबन्धस्य किं लक्षणम्?

ग्रन्थाध्ययनप्रवृत्तिप्रयोजकज्ञानानुकूलविषयत्वं अनुबन्धत्वं।

4. पृ 1 - सर्वस्यैव हि शास्त्रस्य कर्मणे वापि कस्यचित्।
यावत्प्रयोजनं नोक्तं तावत्तत्केन गृह्यते।।
सिद्धार्थो ज्ञातसंबंधः श्रोता श्रोतुं प्रवर्तते।
ग्रन्थादौ तेन वक्तव्यः सम्बन्धः सप्रयोजनः।। श्लो वा।।
प्रयोजनमनुद्दिश्य मन्दोऽपि न प्रवर्तते - न्यायः।।

5. पृ1 - पद्यस्य गद्यकरणं, पदानां वा वाक्यरूपेण व्यवस्थाकरणमन्वयः।
स च द्विविधः दण्डान्वयः खण्डान्वयश्चेति।
कर्तृकर्मभाववाच्यात्मकवाक्याकारेण पदानां व्यवस्थाकरणं दण्डान्वयः।
प्रतिज्ञावाक्यपुरःसरं प्रश्नोत्तरभावेन पदानां व्यवस्थाकरणं खण्डान्वयः।

6. पृ1 - प्रत्यक्षेणानुमित्या च यस्तूपायो न बुध्यते।
एनं विदन्ति वेदेन तस्माद्वेदस्य वेदता।।

7. पृ1 - धर्मे प्रतीयमाने हि वेदेन करणात्मना।
इतिकर्तव्यताभागं मीमांसा पूरयिष्यते।। श्लो वा।
मन्त्रब्राह्मणयोर्वेदनामधेयम्।। ऋग्वेदभाष्यं, आ. श्रौ. सू।

8. पृ 1 - मीमांसादर्शनकारः जैमिनिः।
तत्र सूत्राणि - 2644 उत 2735,
अध्यायाः - 12, अधिकरणनि - 907 उत 911 ।
पादाः - तृतीय, षष्ठ एवं नवम अध्यायेषु प्रत्येके षट् पादाः शेषेषु च चत्वारः पादाः सन्ति तस्मात् षष्ठीपादाः सन्ति।
3 x 8 = 24, 9 x 4 = 36, 24 + 36 = 60.

9. पृ1 - विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम्।
प्रयोजनञ्च पञ्चैते शास्त्रेऽधिकरणं विदुः।।
अत एव मीमांसादर्शनस्यापरं नाम समयविद्या न्यायसाहस्री वा।
समया पौरुषेयी व्यवस्था तन्मूला आचाराः तत्र भवा निर्णया वा सामयाचारिका धर्माः (आपस्तम्बश्रौत्रसूत्रं)। प्रमाणैरर्थपरीक्षणं न्यायः। प्रमाणानि श्रुत्यादीनि तैरर्थाः वैदिकयज्ञीयपदार्थाः तन्मूला स्मृतिपदार्थाश्चैव परीक्षणं न्यायः। तदर्थं सहस्राधिकरणयुक्तदर्शनं न्यायसाहस्री।

10. पृ1- लक्ष्यन्ते प्रत्यायन्ते पदार्था एभिरिति लक्षणान्यध्यायाः।। अतोऽपि मीमांसादर्शनस्य नाम द्वादशलक्षणी, अन्यानि नामान्यस्य दर्शनस्य - पूर्वतन्त्रं, पूर्वमीमांसा, पूजितविचारशास्त्रं, धर्ममीमांसा, अध्वरमीमांसा, वाक्यशास्त्रञ्चेत्यादिः।।

11. पृ1- मीमांसकाः ईश्वरं न मन्यन्ते - इति केचित्। ते चेश्वरं मन्यन्ते किन्तु तस्य विग्रहादिकं न मन्यन्ते, अत एवोच्यन्ते -
''विग्रहो हविषां भोग ऐश्वर्यं च प्रसन्नता।
फलदातृत्वमित्येते पञ्चकं विग्रहादिकम्।।'' (श्लो वा)।
मन्त्रमयी देवता मन्त्रमयश्चैव ईश्वरः, आकारादिरहितः स्वीक्रियन्ते।
द्रव्यत्यागोद्देश्यो देवता ईश्वरश्च मन्यन्ते।।

12. पृ4- प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा।
शासनाद्दंशनाच्चैव शास्त्रमित्यभिधीयते।। स. द. सं।

13. पृ4- धर्माय जिज्ञासा धर्मजिज्ञासा। धर्मस्य स्वरूपज्ञानाय प्रमाणज्ञानाय साधनज्ञानाय फलज्ञानाय च जिज्ञासा भवति।

14. पृ4- विश्वजिन्न्यायः -
स स्वर्गः स्यात् सर्वान् प्रत्यविशिष्टत्वात्।
अप्राप्तेऽज्ञाते चार्थे शास्त्रमर्थवदिति न्यायाच्च।।

15. पृ5/140- दृष्टफलकत्वेऽदृष्टफलकल्पनाया अन्याय्यत्वात्।।
लभ्यमाने फले दृष्टे नादृष्टपरिकल्पना।
विधेस्तु नियमार्थत्वान्नानर्थक्यं भविष्यति।।
सर्वदर्शनसंग्रहः।पृ266।

16. पृ8/15- श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः।
एतच्चतुर्विधं प्राहुः साक्षाद् धर्मस्य लक्षणम्।।मनुस्मृतिः 2.2।
वेदबोधितेष्टसाधनताको, धर्मः (मीमांसा परिभाषा)।
श्रेयःसाधनता ह्येषां नित्यं वेदात्प्रतीयते।
तादूप्येण च धर्मत्वं तस्मान्नेन्द्रियगोचरः।।श्लो वा। 2/23, 24
धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः।
धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम्।।म. स्मृ.। 6/92

पुराणन्यायमीमांसा धर्मशास्त्राङ्गमिश्रिता:।
वेदा: स्थानानि विद्यानां धर्मस्य च चतुर्दश।।स. द. सं।

17. पृ11- कर्मभ्य: प्रागयोग्यस्य कर्मण: पुरुषस्य वा।
योग्यता शास्त्रगम्या या परा साऽपूर्वमिष्यते।।
यागादेव फलं तद्धि शक्तिद्वारेण सिद्ध्यति।
सूक्ष्मशक्त्यात्मकं वै तत् फलमेवोपजायते।। श्लो. वा.।
अन्त:करणवृत्त्यादौ (सां) वासनाच्च चेतस: (बौ)।
पुद्गलेषु (जै) च पुण्येषु (पौ) नृगुणे (नै) ऽपूर्वे (मी) जन्मनि(शाक्ता:)।।
तं. सि. र।।

18. पृ11- अपूर्वश्च चतुर्विध:

1. परमापूर्व = फलापूर्व। 2. समुदायापूर्व = प्रधानापूर्व। 3. उत्पत्त्यपूर्व।
4. अङ्गापूर्व।।

19.पृ12- विधिस्पृष्टे निषेधानवकाशात्। "मा हिंस्यात् सर्वा भूतानि" इति श्रुत्या "पशुना यजेत" - इति श्रुतिं न बाधते। अनुमानाच्च- क्रत्वन्तर्वर्त्तिनी हिंसा, हिंसा न भवति, विधिस्पृष्टत्वात् धर्मविवाहेऽनृतवदनवत्।।

20. पृ13- वेदबोधितानिष्टसाधनताकत्वमधर्मत्वमित्यधर्मलक्षणं सिद्धम् पृ. 13

21. पृ13- स्त्रीषु धर्मविवाहेषु वृत्त्यर्थे प्राणसंकटे।
गोब्राह्मणार्थे हिंसायां नानृतं स्याज्जुगुप्सितं।। या. स्म.।
कर्मनाशानदीस्पर्शात्करतोयातिलांघनात्।
गण्डक्यां बाहुतरणाद्धर्म: क्षरति कीर्तनात्।।

22. पृ19- प्रवृत्तौ वा निवृत्तौ वा या शब्दश्रवणेन धी:। सा चोदना ।। श्लो. वा।
लक्ष्यते प्रमीयतेऽनेनेति लक्षणं प्रमाणं प्रयोजनञ्च। (वेदप्रकाश:)
चोदनैव लक्षणं प्रमाणं च यस्मिन्नर्थे स धर्म:। (वेदप्रकाश:)

धारणात् स्वानुष्ठातुरभीष्टसंयोजनात् प्रतिष्ठापनाद्वा धर्मः। (वेदप्रकाशः)
चोदनेत्यब्रवीच्चात्र शब्दमात्रविवक्षया।
न हि भूतादिविषयः कश्चिदस्ति विधायकः।। श्लो. वा.।

23. पृ 20/141- यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम्।
अभिलाषोपनीतञ्च तत्सुखं स्वःपदास्पदं। सां. कौ., श्लो. वा.।

24. पृ 27/34- भवितुर्भवनानुकूलो भावयितुर्व्यापरविशेषो भावना।
पुरुषप्रवृत्त्यनुकूलभावयितुर्व्यापारविशेषो शाब्दीभावना।
प्रयोजनेच्छाजनितक्रियाविषयकव्यापार आर्थीभावना।
तत्र -आर्थीभावना वाच्यः, आख्याततत्त्वांशो तस्य वाचकः, वाचकत्वं च तज्ज्ञानहेतुत्वेन। अर्थात् विध्यर्थसंबंधी - शाब्दी। विधेयसंबंधी - आर्थी।

25. पृ27.- पुरुषस्य वेदेन सह चतुर्धा संबंधो भवितुमर्हति, ते च :-

| | | |
|---|---|---|
| 1. पदपदार्थसंबंधकर्तृत्वद्वारा | - तन्निराकृतं | - औत्पत्त्यधिकरणे। |
| 2. शब्दकर्तृत्वद्वारा | - तन्निराकृतं | - शब्दनित्यत्त्वाधिकरणे। |
| 3. वाक्यवाक्यार्थसंबंधकर्तृत्वद्वारा | - तन्निराकृतं | - वाक्याधिकरणे। |
| 4. ग्रन्थनिर्मातृत्वद्वारा | - तन्निराकृतं | - अपौरुषेयत्वाधिकरणे। |

वेदाध्ययनं सर्वं गुर्वध्ययनपूर्वकं वेदाध्ययनसामान्यात् अधुनाऽध्ययनवत्।।
(श्लो.वा- वाक्य 366)

26. पृ 28 - शक्तिः -

| | | | |
|---|---|---|---|
| | केवल व्यक्तौ | - | नव्यनैयायिकाः। |
| | केवल जातौ | - | मीमांसकाः। |
| | जातिविशिष्टव्यक्तौ | - | वैयाकरणाः। |
| | अपोहे (अतन्न) | - | बौद्धाः। |

क्रियावाचकमाख्यातमुपसर्गो विशेषकृत्।
सत्त्वाभिधायकं नाम निपातः पादपूरणः।। (यास्कमुनिः)

27. पृ32/47-अपौरुषेयत्वं नाम स्वसमानजातीयानुपूर्वीसापेक्षोच्चारणकर्तृत्वम्।

पूर्वकालव्यापकपुरुषसमवेतमानान्तरजन्यज्ञानापेक्षोत्पत्तिकसमानानु-
पूर्विकत्वे सति अध्ययनविषयत्वे सत्यस्मर्यमाणकर्तृकत्वं वा। (1.1.
29-32 मीमांसा सूत्र)

28. पृ 34/41- यो ज्ञातः सन् स्ववृत्तितयेष्यते स पुरुषार्थः। यं ज्ञातं सत्स्ववृत्तितयेष्यते वा। अतः प्रमेयोऽर्थस्त्रिविधः - क्रत्वर्थः, पुरुषार्थः, उभयार्थश्च। कर्मभेदहेतवष्षट् - शब्दः, अभ्यासः, संख्या, संज्ञा, रूपं तथा प्रकरणञ्च।

29. पृ34/67- अर्थद्वयस्य वाचकश्शब्द एक एव। तद्रूपा च श्रुतिः समानाभिधानश्रुतिः।।
अत्र श्रुतिः 'निरपेक्षो रवः' इत्याकारकं प्रमाणं, न तु वेदः।।

30. पृ38- आर्थीभावानायाः साध्यत्वेन स्वर्गमेवान्वेति, कथं- कर्तृत्वादिस्तु एकप्रत्ययगम्यत्वेऽपि पूर्वभावित्वात्। कालादयस्तु एकपदगम्यत्वेप्यनु-पादेयत्वात् पुरुषार्थत्वाभावाच्च। पुरुषेण कृत्या संपादयितुं शक्या उपादेयाः पुरुषेण कृत्या संपादयितुमशक्या अनुपादेयाः। अनुपादेयाः - "देशः कालो निमित्तञ्च फलं संस्कार्यमेव च। इति मीमांसकाः प्राहुरनुपादेय पञ्चकम्"।।

31. पृ47/48- मन्त्रब्राह्मणयोर्वेदनामधेयं। (आपस्तम्बश्रौतसूत्र), ब्राह्मणं नाम कर्मण-स्तन्मन्त्राणाञ्च व्याख्यानग्रन्थः। (तैत्तिरीय संहिता 1.5.1 इत्यस्य भाष्ये)

32. पृ47/48- प्रत्यक्षेणानुमित्या च यस्तूपायो न बुध्यते।
एनं विदन्ति वेदेन तस्माद्वेदस्य वेदता।।

33. पृ47/48- तत्रर्गवेदधरः पैलः सामगो जैमिनिः कविः।
वैशम्पायन एवैको निष्णातो यजुषामुत।।
अथर्वाङ्गिरसामासीत् सुमन्तुर्दारुणो मुनिः।। (भागवत 1.4.21-22)

34. पृ48- अग्निसूर्यदेवताकस्य सायंप्रातःकालयोर्नियमेनानुष्ठेयस्य कर्मणः ''अग्निहोत्र'' मिति यौगिकं नामधेयं।

35. पृ 50 - ''तदगुणास्तु विधीयेरन् अविभागाद् विधानार्थे न चेदन्येन शिष्टाः'' [(जै. सू.1.4.9)। अस्यार्थः - स च गुणाश्च तद्गुणाः (प्रधानभूतो यागः अग्न्यादिरूपा गुणाश्च) विधानार्थे (तत्तद्गुणविशिष्ट तत्तद्प्रधानभूते विधेये) अविभागात् (भेदविरहात् भिन्नविधयोऽसत्त्वात्) विधीयेरन् (विशिष्टं विधेयतया प्रतिपाद्येरन्) न चेदन्येन शिष्टाः यदि वाक्यान्तरेण नोपदिष्टाश्चेत् अर्थात् यदा वाक्यान्तरेण न विहिताः स्युरिति)]।

36. पृ50- मतोरर्थो यस्याः सा मत्वर्था। सा चासौ लक्षणा चेति मत्वर्थलक्षणा। आलङ्कारिका यां लक्षणां ''उपादानलक्षणा'' इत्युच्यन्ते तां नैयायिकाः ''अजहत्स्वार्थालक्षणा'' इत्युच्यन्ते, तामेव मीमांसकाः ''मत्वर्थलक्षणा'' इत्युच्यन्ते।। टि सं 26 भी देखें। मतुबर्थाः षट् पृ 52 देखें)

37. पृ51- यत्र वाक्यभेदः तत्राष्टौ दोषाः स्युः (यथा व्रीहिभिर्यजेत यवैर्वा-इत्यत्र। कथं?)

1. व्रीह्यनुष्ठाने-यवशास्त्रे– स्वार्थानुष्ठापकत्वरूपप्रामाण्यत्यागः।1।
स्वार्थाननुष्ठापकत्वरूपाप्रामाण्यस्वीकारश्च।2।

यवानुष्ठाने च– पूर्वपरित्यक्तप्रामाण्यस्य स्वीकारः।3।
स्वीकृतप्रामाण्यस्य च परित्यागः।4।

2. यवानुष्ठाने-व्रीहिशास्त्रे– स्वार्थानुष्ठापकत्वरूपप्रामाण्यत्यागः।5।
स्वार्थाननुष्ठापकत्वरूपाप्रामाण्यस्वीकारश्च।6।

व्रीह्यनुष्ठाने च– पूर्वपरित्यक्तप्रामाण्यस्य स्वीकारः।7।
स्वीकृताप्रामाण्यस्य च परित्यागः।8।

38. पृ 54/61- वाक्यभेदो द्विविधः-विध्यावृत्तिलक्षणो गौरवलक्षणश्च। तत्रापि प्रथमः पुनः द्विविधः -स्वातन्त्र्येणावृत्या उभयविधाने केवलावृत्तिलक्षणो वाक्यभेदः। यदा तु तन्त्रेणोभयं विधीयते तदा विरुद्धत्रिकद्वयप्रसङ्गदोषो भवति। यथा यागेनेष्टं भावयेत् सोमेन यागं भावयेत् इत्यत्र स्वातन्त्र्येण

सोमयागयोर्विधाने विध्यावृत्तिलक्षणो वाक्यभेदः। तन्त्रेणोभयविधाने तु यागे विरुद्धत्रिकद्वयापत्तिः स्यात्। किं तत्? उपादेयत्वं विधेयत्वं गुणत्वञ्च यागे फलापेक्षया, पुनस्तस्मिन्नेव गुणात्मकसोमापेक्षया उद्देश्यत्वं अनुवाद्यत्वं प्राधान्यत्वञ्चेति कृत्वा विरुद्धत्रिकद्वयं यागे।

39. पृ56– तत्प्रख्यशास्त्रन्यायः – तत्प्रख्यं चान्यशास्त्रं इति (जै सू 1.4.4) तस्य गुणस्य द्रव्यस्य देवताया वा प्रख्यं प्रापकं ज्ञापकं वा अन्यं शास्त्रं विधिवाक्यं विधत्ते – इति तु सूत्रार्थः। प्रकृते तस्य अग्न्यात्मकदेवतारूपीगुणस्य प्रख्यं प्रकाशकं ज्ञापकं अन्यं मन्त्रवर्णात्मकं शास्त्रं ''अग्निर्ज्योतिर्ज्योति-र्ज्योतिरग्निः स्वाहा'' इत्यात्मकं विद्यते यस्मात् तस्मात् ''अग्निहोत्रं जुहोति'' इति वाक्यं उत्पत्तिविधिशास्त्रमेव भवितुमर्हति।।

40. पृ56– विधिस्त्रैविध्यमुक्तं पृ 48 से पृ 53 तक, तच्चतुर्विधञ्च पृ 56 से पृ 143 तक एवं पुस्त्रैविध्यं पृ 146 तमे।

41. पृ61–फलाय विधीयमानो गुणो यत्र कारकतामापद्यते स आश्रयः।

42. पृ61–परस्वरूपसिद्धिरेव प्रयोजनं यस्य स अङ्गः शेषो वा। पारार्थ्यं वा। परोद्देशप्रवृत्तकृतिसाध्यत्वरूपं वा = परं स्वर्गादिः दर्शादिर्वा तदुद्देशेन संकलनया मनसि सिद्धवत्करणेन तत्साधनभूतयागादिषु प्रवृत्तस्य पुरुषस्य कृतिसाध्यत्वरूपं कृतिसाध्यत्त्वव्याप्यं यागादिषु प्रयाजादिषु च यद्वर्तते तदङ्गं।

43. पृ64– श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थ-विप्रकर्षात्। जै.स. 3.3.14.। समवाये = समानविषयत्वेन द्वयोर्विरोधे, अर्थविप्रकर्षात् = स्वार्थबोधने विलम्बात् = स्वेन अङ्गत्वबोधने परस्य पूर्वसापेक्षत्वादप्रवृत्ते सति, पारदौर्बल्यं = परं पूर्वापेक्षया दुर्बलं।

44. पृ64– बाधिकैव श्रुतिर्नित्या समाख्या बाध्यते सदा।
मध्यमानां तु बाध्यत्वं बाधकत्वञ्चापेक्षया।।

45. पृ66- श्रुतिप्रमाणं- निरपेक्षो रवः। अङ्गत्वघटककारकत्त्वस्य साक्षाद्बोधकं प्रमाणं, स्वतो विनियोजकं प्रमाणं, अन्यानपेक्ष्य विनियोजकं प्रमाणं वा।

46. पृ66- ''अभिधात्री श्रुतिः काचित् विनियोक्त्री अपरस्तथा।
विधात्री च तृतीयोक्तं प्रयोगो यन्निबन्धनः।।''

तत्र विधत्ते या सा विधात्री प्रवर्तना बोधिका। अभिधया स्वार्थप्रतिपादयित्री या सा अभिधात्री शक्यार्थद्वारा द्रव्यादिपदार्थबोधिका वा। यस्य च शब्दस्य श्रवणादेव संबंधः प्रतीयते सा विनियोक्त्री अङ्गत्वबोधिका। श्रुतिप्रमाणं कथं अङ्गत्वं विनियुज्यते?

1. विधिबोधकशब्देन
2. विनियोगबोधकशब्देन
3. विनियोगसंबंधबोधकशब्देन चाङ्गत्वं ज्ञापयति।

विनियोक्त्री पुनस्त्रिधाः - विभक्तिरूपा (स्पष्टं), एकाभिधानरूपा = समानाभिधानरूपा = शेषशेषिणोः संबंधाभिधायकश्शब्दः प्रत्ययो एकमेव यत्रार्थात् समानं भवति तत्र सा। एकपदरूपा = समानपदरूपा = शेषशेषिणोः संबंधबोधकश्शब्दः पदमेकमेव यत्र तत्र सा। टि सं 29 भी देखें।

47. पृ68- पञ्चाग्नयः-
श्रौताग्नयः-दक्षिणाग्नि, गार्हपत्याग्नि, आहवनीयाग्नि।
स्मार्ताग्नयः-आवसथ्य, शम्य/सभ्य। पिता वा एषोऽग्नीनां यद्दक्षिणः, पुत्रो गार्हपत्यः, पौत्रः आहवनीयः (आश्वलायन श्रौ.सू.)

48. पृ78/86- उपस्थानं नाम मन्त्राभिधानपूर्वकमुत्थानम् समीपगमनं वा।

49. पृ79- लिङ्गप्रमाणं कथमङ्गत्वं बोधयति?
1.स्वाभिधेयप्रतिपादनं
2.सामर्थ्यनिरूपणं
3. श्रुतिकल्पना
4 विनियोगश्चेति चतुःकक्ष्याऽङ्गत्वं बोध्यते।

श्रुतिस्तु प्रथमचतुर्थाभ्यां द्वाभ्यां कक्षाभ्यामेवाङ्गत्वं बोधयति। अत: श्रुति: प्रबला, लिङ्गं दुर्बलं। लिङ्गं द्विविधं- अर्थगतं शब्दगतञ्च। प्रथमस्तु-स्रुवेणावद्यति, द्वितीयस्तु अग्नये त्वा जुष्टं निर्वपामि।

50. पृ82- बर्हि = दशविधा दर्भा:, उलप: = शुष्कं बर्हि: तृणं वा।

51. पृ 82- एकतिङ् वाक्यमिति वैयाकरणा:, मीमांसकास्तु अर्थैकत्वादेकं वाक्यम्।
वाक्यप्रमाणं कथमङ्गत्वं बोधयति?
1. स्वाभिधेयप्रतिपादनं, 2. एकवाक्यत्वनिर्णय:, 3. लिङ्गकल्पना 4. श्रुतिकल्पना, 5. विनियोग:। सर्वनाम्न उत्सर्गत: पूर्वप्रकाशका:/ परामर्शका:।

52. पृ82- लवितव्यं च बर्हिर्द्विविधं - मुख्यं गौणञ्चेति। मुख्यन्तु कुशकाशादि दशदर्भरूपं। गौणन्तु तत्सदृशं तृणान्तरं। उलपादय: गौणा:।

53. पृ82- रूढञ्च लक्षकञ्चैव योगरूढञ्च यौगिकम्।
तच्चतुर्धा पदरूपं यौगिकं मन्यतेऽधिकम्।। (शब्दशक्तिप्रकाशिका)

54. पृ86- किञ्चित्प्रकरणमारभ्याधीतं वाक्यमारभ्याधीतम्। तद्भिन्नमनारभ्याधीतं।

55. पृ86- पात्राणि द्विधा स्रुवा, स्रुक्च। स्रुक्च पुनस्त्रिधा-जुहू, उपभृत्, ध्रुवा चेति।
येनोपभृतो ध्रुवायाश्च होमायाऽऽज्यादिकमुद्ध्रिते सा स्रुवा।
बाहुमात्र्यस्स्रुच: पाणिमात्रपुष्कर: त्वग्बिला हंसमुखप्रसेका जुहू:।

56. पृ87- दर्शपूर्णमासप्रकरणे ''प्र वो वाजा'' इत्यादय एकादशसंख्याका मन्त्रा (एवमेव ज्योतिष्टोमे पञ्चदशसंख्याका) आम्नाता:।
ऋत्विजा होत्रा यदा इमे पठ्यन्ते तदाऽध्वर्युरेकैकस्या ऋचोऽन्ते एकैकां समिधामाहवनीयेऽग्नौ प्रदीप्त्यर्थं प्रक्षिपति। अत: इमे समिदिन्धनप्रकाशका मन्त्रा: ''सामिधेन्य:'' इति कथ्यन्ते।

57. पृ88 – सुष्ठुवदतीति सूक्तवाक् मन्त्रविशेष:। तेषां समूहो "निगद" इत्युच्यते। तेषां प्रहरणाङ्गत्वं – "सूक्तवाकेन प्रस्तरं प्रहरति" इति विधानात्। प्रथमो लूनो दर्भमुष्टि: "प्रस्तर:" वेद्यां तेषामुपरि हर्वींषि आसाद्यन्ते। यागान्ते चाध्वर्युणा तेषामाहवनीये प्रक्षेपणमेव "प्रहरणम्" इत्युच्यन्ते।।

58. पृ92– 'स स्वर्ग: स्यात्सर्वान् प्रत्यविशिष्टत्वात्' इति विश्वजिन्न्यायस्य बाधक: 'फलवत्सन्निधावफलं तदंगम्।'

59. पृ93– यागा:चतुर्विधा: – चरुसंस्थाक:, पाकसंस्थाक:, हवि:संस्थाक:, पशुसंस्थाकश्च।

60. पृ94–प्रतिप्रयाजं किञ्चिदन्तरमाहवनीयसमीपदेशं प्रति पादप्रक्षेपणं अभिक्रमणम्।

61. पृ96/133 – संदंशे द्रष्टव्य: – 'चतुर्जुह्वाम् गृह्णाति प्रयाजेभ्यस्तत्' – प्रजाजत्रयार्थं। 'अष्टावुपभृति गृह्णाति प्रयाजानुयाजेभ्यस्तत्' (शेषप्रयाजद्वय + अनुयाजत्रय)। 'चतुर्ध्रुवायां गृह्णाति सर्वस्मै वा एतद् यज्ञाय गृह्यते यद्ध्रुवायामाज्यम्' सर्वशेषयज्ञार्थं। 'प्रयाजानिष्ट्वा हर्वींष्यभिघारयति' (मिथुनवेदनमन्त्रानन्तरमन्त्र:)।

62. पृ102 – "अनुब्रूहि" इत्यध्वर्युप्रैषानन्तरं होत्रा पठ्यमानो मन्त्र पुरोऽनुवाक्या।
"यज" इत्यध्वर्युप्रैषानन्तरं होत्रा पठ्यमानो मन्त्र याज्या।
अनूच्यतेऽनयेति अनुवाक्या, इज्यतेऽनयेति याज्जा।
टि सं 73 भी देखें।

63. पृ105/106/131 – **ज्योतिष्टोमादिसोमयागानां स्वरूपम्**

| दिन | कर्म | पशुः | दिन नाम |
|---|---|---|---|
| प्रथम | दीक्षणीयेष्टि | – | दीक्षादिन |
| द्वितीय | प्रायणीय, आतिथ्य, उपसच्चेष्टयः | – | उपसद्दिन |
| तृतीय | रजःशयोपसदिष्टि | – | उपसद्दिन |
| चतुर्थ | हरिशयोपसदिष्टि | अग्निषोमीयपशु | औपवसथ्यदिन |
| पञ्चम | उदयनीयेष्टि | सवनीयपशु | सौत्यदिन |
| षष्ठ | अवभृथेष्टि | आनुबन्ध्यपशु | अवभृथदिन |

64. पृ107– उलूखलम्, मुसलम्, कृष्णाजिनम्, दृषदुपले, इत्यादीनि पुरोडाशपात्राणि। कुम्भी, शाखापवित्रम्, अपिधानी, दोहनपात्रम्, इत्यादीनि सान्नायपात्राणि (दधिपयसोर्यागे)।

65. पृ109– सम्यगाख्यायतेऽनयेति समाख्या। स्वान्तर्निर्दिष्टपदसमुदायार्थान्वयेन योऽर्थः प्रतीयते स यौगिकार्थः, तद्बोधकश्शब्दश्च यौगिकः। ज्योतिष्टोमे चत्वारश्चमसाः सन्ति होत्रुद्गात्रध्वर्युयजमानसंज्ञकाः।

66. पृ111– सर्वे द्रव्यविधयो नियमविधयः।

67. पृ111– संनिपत्य द्रव्यादिषु संबध्योपकुर्वान्ति यानि तानि संनिपत्योपकारकानि, गुणकर्माणि इति वा उच्यन्ते। आरात् साक्षात् द्रव्यादिसम्बन्धमनपेक्ष्योप-कुर्वन्ति यानि तानि आरादुपकारकानि। प्रधानकर्माणि इति वा उच्यन्ते।

68. पृ112 – यागादौ त्रयोऽंशाः सन्ति – उद्देशांशः, त्यागांशः, प्रक्षेपांशश्चेति।

69. पृ112– यद्दैवत्यः पशुः तद्दैवत्यः पुरोडाशः – इति विधानात्।।

70. पृ118- एकस्मिन्नर्थे प्रसरः = वृत्तिः यस्या सा, एकः प्रसरो ययोः तयोर्भाव इति वा एकप्रसरता। समासेनावगतैकार्थप्रतिपादकत्वरूपसामर्थ्यभङ्गो भवेदित्यर्थः।

71. पृ118- श्रुतिना तु विरोधे स्यान्नैव वचनसम्भवे।
यथाश्रुत्यैव हि न्याय्यमर्थस्य परिकल्पनम्।।
यतः प्रयोजनवशेन यः क्रमः कल्प्यते सोऽर्थक्रमः, यतश्च श्रुत्यैव तत्कल्पनं न्याय्य इति तयोर्न विरोधः।

72. पृ119- शयानवत्सजान्वाद्याकृतिविशिष्टदर्भमुष्टिविशेषो वेदः। सम्मार्जनखननोद्धननादिभिस्संस्कारैः संस्कृता आहवनीयगार्हयत्ययोर्मध्ये चतुरङ्गुलनिखाता भूमिः वेदिः। तच्च हविर्विधानस्थापनस्थानविशेषरूपम्।

73. पृ120-

| अध्वर्युः | तेनैव (अध्वर्युणा) | होत्रा | अध्वर्युः | होत्रा |
|---|---|---|---|---|
| द्रव्यत्यागः करोति | 'अनुब्रूहि' इत्यादेशः | पुरोनुवाक्या पाठः करोति | "यज" इत्यादेशः | याज्यामन्त्र पाठः करोति। |

तदनन्तरं होता एव वषट् करोति, अतः तस्य नाम "वषट्कार" इति।
षोडश ऋत्विजां दीक्षाक्रमानुसारेण गणशः क्रमः दक्षिणाश्च प्रकारः -

| अध्वर्युगणः | ब्रह्मगणः | उद्गातृगणः | होतृगणः | दक्षिणा |
|---|---|---|---|---|
| अध्वर्युः | ब्रह्मा | उद्गाता | होता | पूर्णिनः |
| प्रतिप्रस्थाता | ब्राह्मणाच्छंसी | प्रस्तोता | मैत्रावरुणः | अर्धिनः |
| नेष्टा | आग्नीद् | प्रतिहर्ता | अच्छावाकः | तृतीयिनः |
| उन्नेता | पोता | सुब्रह्मण्यः | ग्रावस्तुत् | पादिनः |

74. पृ127- स्वार्थचोदितदेवताराहित्यमव्यक्तत्वं। द्रव्यराहित्यं वा।

75. पृ138- अननुष्ठाने प्रत्यवायजनकत्वे सत्यनुष्ठाने च चित्तशुद्ध्यतिरिक्त फलाजनकत्वं (वेदान्तमते) ब्रह्मलोकप्रापकत्वं (मीमांसामते) नित्यकर्मत्वम्।

76. पृ141- तपः श्रुतञ्च योनिश्च ह्येतद् ब्राह्मणकारणं।
तपःश्रुताभ्यां यो हीनो जातिब्राह्मण एव सः।।

77. पृ142- समुदित 112 गौदक्षिणाया विभागः — क्रमेण पूर्णिनः 48, अर्धिनः 24, तृतीयिनः 16, पादिनः 12, आचार्याय च 12.

78. पृ142- ते च मन्त्रास्त्रिविधः - करण, क्रियमाणानुवादी, अनुमन्त्रणश्च।
पूर्वं मन्त्रमुच्चार्य तदन्ते यत्र कर्म क्रियते स करणमन्त्रः।
मन्त्रोच्चारणसमकालमेव यत्र कर्मानुष्ठीयते स क्रियमाणानुवादी।
ये तु कर्मानुष्ठानानन्तरं पठ्यन्ते तेऽनुमन्त्रणमन्त्राः।

79. पृ149- "त्रीणि ह वै यज्ञस्योदराणि गायत्रीबृहत्यनुष्टुप्।
अत्र ह्येवावपन्ति अत एवोद्वपन्ति।।"

सोमयागप्रकृतिभूतज्योतिष्टोमे सन्ति 12 स्तोत्राणि, तेषामनुष्ठानक्रमश्चेत्थम् -

| | | | | |
|---|---|---|---|---|
| प्रातःसवने - | बहिष्पवमानं | एकं | 1 | त्रिवृत्स्तोमकम्। |
| | आज्यस्तोत्राणि | चत्वारः | 4 | पञ्चदशस्तोमकम्। |
| माध्यन्दिनसवने - | माध्यन्दिनपवमानं | एकं | 1 | पञ्चदशस्तोमकम्। |
| | पृष्ठस्तोत्राणि | चत्वारः | 4 | सप्तदशस्तोमकम्। |
| सायंसवने - | आर्भवपवमानं | एकं | 1 | सप्तदशस्तोमकम्। |
| | यज्ञायज्ञीयं | एकं | 1 | एकविंशतिस्तोमकम्। |

80. पृ155- भागरूपनामभ्यो धेयः (व्याकरणवार्तिकं)।

81. पृ157- गुणस्य विधेयत्वं फलस्य च उद्देश्यत्वं अङ्गीकारात्, उद्भिच्छब्दो द्वयोर्मध्ये न एकोऽपि सम्भवति।

82. पृ168- चतुर्षु चतर्षु मासेष्वन्तरालेषु क्रियमाणा इष्टिः चातुर्मास्येष्टिः, तस्यानुष्ठानक्रमः - फाल्गुन 1, ज्येष्ठ 4, भापद्रपद 7, मार्गशीर्षश्च 10. अथवा फाल्गुन 1, आषाढ 5, कार्तिक 9 एवं पुनः फाल्गुने 1।

83. पृ173- प्रसज्यप्रतिषेधोऽयं क्रियया सह यत्र नञ्।
पर्युदासः सो विज्ञेयो यत्रोत्तरपदेन नञ्।।

84. पृ179- चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च।
हूयते च पुनर्द्वाभ्यां स नो विष्णुः प्रसीदतु।। (तै सं 1.6.11)
अर्थात् - चतुर्भिश्च = आश्रावय, चतुर्भिश्च = अस्तु श्रौषट्, द्वाभ्यां = यज, पञ्चभिरेव च = ये यजामहे। हूयते च पुनर्द्वाभ्यां = वौषट्, स नो विष्णुः प्रसीदतु।
क्रम ऐसा है - अध्वर्यु जुह्वा में द्रव्य को ग्रहण कर आग्नीध्र को आदेश देता है '**अनुब्रूहि/आश्रावय**' (यह है प्रथम चतुर्भिः), पाठ करने के अनन्तर आग्नीध्र कहता है '**अस्तु श्रौषट्**' (यह है दूसरा चतुर्भिः), तत्पश्चात् अध्वर्यु द्रव्य त्याग करके ('इदं न मम' कह कर) होता को पुरोनुवाक्या का पाठ करने हेतु आदेश देता है 'अनुब्रूहि' तब होता याज्या मन्त्र का पाठ '**ये यजामहे**' (यह है पञ्चभिः) से शुरु करके अन्त में '**वौषट्**' (यह है द्वाभ्याम्) कह कर अध्वर्यु से कहता है '**यज**' (यह है पुनर्द्वाभ्याम्), तब अध्वर्यु 'स्वाहा' कह कर आहुति डालता है।

85. पृ186- येन स्तोत्रेण क्रतूपरम्यते सा संस्था। सा च सप्तधा। तथाहि -




86. पृ 196- पौष, माघ और फाल्गुन मास के कृष्ण पक्ष की सप्तमी, अष्टमी और नवमी तिथि के दिन किये जानेवाले श्राद्धकर्म को **अष्टका श्राद्ध** कहते हैं।

।।हरि: ओम् तत्सत्।।

| क्रमांक | स्वा. शान्तिधर्मानन्द सरस्वतीजी के ध्वनिमुद्रित स्वाध्याय :- |
|---|---|
| 1 | 1.0 अमरकोशः, 1.1 पाणिनीयाष्टाध्यायी, 1.2 पाणिनीयधातु पाठः, 1.3 पाणिनीयगणपाठः, 1.4 पाणिनीयलिंगानुशासनम्, 1.5 पाणिनीयशिक्षापाठः, 1.6 फिट्सूत्राणि, 1.7 उणादिसूत्राणि, 1.8 लघुसिद्धान्तकौमुदी, 2. अर्थसंग्रहः, 3. सांख्यकारिका, 4 .1 तर्क-संग्रह - पदकृत्यम्, 4.2 तर्कसंग्रह-न्यायबोधिनी। |
| 2 | 5. वेदान्तपरिभाषा, 6.1 योगसूत्रम् - व्यासभाष्य सहित, 6.2 योग प्रायेगिक कक्षायें, 6.3 योगसूत्र मूलपाठः, 7.मानमेयोदयः, 8. मान-मनोहरः, 9. तर्कभाष्या, 10. शिवसूत्राणि। |
| 3 | 11. ब्रह्मसूत्रं, 12. भगवद्गीता (प्रथमव्याख्यानम्)। |
| 4 | उपनिषः (प्रथमव्याख्यानम्) - 13.1 ईश, 13.2 केन, 13.3 कठ, 13.4 प्रश्न, 13.5 मुण्डक, 13.6 माण्डूक्य, 13.7 तैत्तिरीय, 13.8 ऐतरेय, 13.9 छान्दोग्य, 13.10 बृहदारण्यक, 13.11 श्वेताश्वतर। |
| 5 | 14. भगवद्गीता (द्वितीयव्याख्यानम्), भगवद्गीता मूलपाठः। |
| 6 | 15. उपनिषदः (प्रथमव्याख्यानम्) - 15.1 ईश, 15.2 केन, 15.3 कठ, 15.4 प्रश्न, 15.5 मुण्डक, 15.6 माण्डूक्य, 15.7 तैत्तिरीय, 15.8 ऐतरेय, 15.11 श्वेताश्वतर। |
| 7 | 16. (अंग्रेजी में) छान्दोग्य और 17. बृहदारण्यक 1-5 तक। |
| 8 | 18. श्रीमद्भागवतम् - कक्षायें। |
| 9 | 19. श्रमद्भागवतकथायें - 19.1 शान्तिधर्मानन्दजी, 19.2 ठाकुरी, 19.3 काशिकानन्दजी, 19.4 रामानन्दजी, 19.5 पराशरजी। |
| 10 | 20. पंचदशी, 21. सिद्धान्तबिन्दुः, 22. शिवदृष्टिः। |
| 11 | 23. प्रवचनसंग्रहः, 24. उपदेशसाहस्री, 25. त्रिपुरोपनिषद्, 26. भावनोपनिषद्, 27. श्रीचक्रपूजा - संक्षिप्तविधिः, 28. षड्दर्शन सूत्रपाठः। |
| 12 | 29. सिद्धान्तकौमुदी। |
| 13 | 30. न्यायसिद्धान्तमुक्तावली, 31. व्याकरणमहाभाष्यं (नवाह्निक-पर्यन्त), 32. चित्सुखी। |
| 14 | 33. अद्वैतसिद्धिः, 34. खण्डनखण्डखाद्यम्, 35. बालबोध-ज्योतिषसारसमुच्चयः, 36. वेदान्तसारः, 37. मानसागरी। |

